अथ

# मृत्युञ्जयस्तोत्रम्

महामहोपाध्याय-पण्डितविद्याधरशास्त्रि-श्रीदौलतरामगौडेनसंशोधितम् ।

प्रकाशक—ठाकुरप्रसाद एण्ड सन्स बुक्सेलर,
राजादरवाजा, कचौड़ीगली,
वाराणसी । मूल्य पचीस पैसा ।

* अथ *

# मृत्युञ्जयस्तोत्रम्

महामहोपाध्याय-पण्डितविद्याधरशास्त्रिपुत्र-
श्रीदौलतरामगौडेनसंशोधितम् ।

प्रकाशक—ठाकुरप्रसाद एन्ड सन्स बुकसेलर,
हेड आफिस—राजादरवाजा, ब्राञ्च—कचौड़ीगली, वाराणसी ।

मूल्य २५ पैसे

## महा-महा*मृत्युञ्जयमन्त्रानुष्ठान—

ॐ तत्सवितुर्वरेण्यं त्र्यम्बकं यजामहे भर्गोदेवस्य धीमहि सुगन्धिं पुष्टिवर्धनं धियो यो नः प्रचोदयात् उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ।

आचम्य प्राणानायम्य ॐ ऊर्ध्वकेशि वि० । पृथ्वीतिमन्त्र० । ॐ पृथ्वी त्वया० । ॐ यऽए ता० । देशकालौ संकीर्त्य-अमुकगोत्रस्यामुकशर्मणो यजमानस्य जन्मकुण्डल्यां वर्ष कुण्डल्यां गोचरे च अरिष्टस्थानस्थितानामादित्यादिग्रहाणामशुभफलनिवृत्तिपूर्वकं शुभस्थानस्थितानांग्रहाणां च शुभफलप्राप्तये यजमानस्य शरीरे उत्पन्नोत्पत्स्यमाना-

---

* ब्रह्मकर्मसमुच्चय पृ० ३६३-३६४ में मृत्युंजयमन्त्र ६ प्रणवयुक्त यह है–(१) ॐ ह्रौं जूं सः ॐ भूर्भुवःस्वः ॐ त्र्यम्बकं ॐ स्वः भुवःभूः ॐ सः जूं ह्रौं ॐ। (२) चतुर्दशप्रणवयुक्त यह है—ॐ ह्रौं ॐ जूं ॐ सः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकं ॐ यजामहे ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ ह्रौं ॐ।

खिलारिष्टनिवृत्तये श्रीमहामहामृत्युञ्जयप्रसादात् दीर्घायुष्यसततारोग्यफलप्राप्तये श्रीमहामहामृत्युञ्जयप्रीत्यर्थञ्च अष्टशतसंख्याकं श्रीमहामहामृत्युञ्जयजपं करिष्यामि । तत्रादौ शरीरशुद्ध्यर्थं न्यासान् करिष्ये ।



अस्य श्रीमहामहामृत्युञ्जय ( मृतसंजीवनी ) मन्त्रस्य ( प्रणवव्याहृतीयुतस्य ) वामदेवकहोलवसिष्ठा ऋषयः पंक्तिर्गायत्री-अनुष्टुप्छन्दांसि श्रीसदाशिवमहामहामृत्युञ्जयरुद्रो देवता श्रीं बीजं ह्रीं शक्तिः ममाभिष्टसिद्ध्यर्थे जपे विनियोगः। ॐ वसिष्ठऋषये नमः शिरसि १ ॐ अनुष्टुप्छन्दसे नमः मुखे २ ॐत्र्यम्बकपार्वतीदेवताय नमः गुह्ये ३ ॐ हुँ शक्तये नमः पादयोः ॥ ४ ॥

करन्यासः—ॐ तत्सवितुर्वरेण्यम्—अंगुष्ठाभ्यां नमः १ ॐ त्र्यम्बकं यजामहे—तर्जनीभ्यां नमः २ ॐ भर्गोदेवस्य धीमहि—मध्यमाभ्यां नमः ३ ॐ सुगन्धिं पुष्टिवर्धनम्—अनामिकाभ्यां नमः ४ ॐ धियो यो नःप्रचोदयत्—कनिष्ठिकाभ्यां नमः ५ ॐ उर्वारुकमिवबन्धनामृत्योर्मुक्षीयमामृतात् इति करतलकरपृष्ठाभ्यां नमः ॥ ६ ॥ हृदयादिन्यासः ॐ तत्सवितुवरेण्यम् हृदयाय नमः १ ॐ त्र्यम्बकं यजामहे शिरसे स्वाहा २ ॐ भर्गोदेवस्य धीमहि शिखायै वषट् ३ ॐ सुगन्धिं पुष्टिवर्धनम्—कवचाय

हुम् ४ ॐ धियो यो नः प्रचोदयात्——नेत्रत्रयाय वौषट् ५ ॐ उर्वारुकमिवबन्धना-
न्मृत्योर्मुक्षीय मामृतात्——अस्त्राय फट्। अथ ध्यानम्——

चन्द्रार्काग्निविलोचनंस्मितमुखंपद्मद्वयान्तः स्थितंमुद्रापाशमृगाक्षसूत्रविलसत्पाणिंहिमांशुप्रभम् ॥
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्वलं कान्त्या विश्वमनोहरं पशुपतिं मृत्युञ्जयं भावयेत्।

ॐ माले माले महामाये सर्वशक्ति स्वरूपिणि। चतुर्वर्गस्त्वयिन्यस्तं तस्मान्मे सिद्धिदा भव। 'ॐ ह्रीं अक्षमालायै नमः' इति सम्प्रार्थ्य ॐ अविघ्नं कुरु माले त्वं जपकाले सदा मम। त्वं बीजं सर्वमन्त्राणां इष्टसिद्धिकरी भव॥ 'त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव। शिवं कुरुष्व मे भद्रे पशोर्वीर्यं च सर्वदा॥ गुह्याति गुह्य गोप्ता (प्त्री) त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देव (देवि) त्वत्प्रसादान्महेश्वर (त्वं हृदिस्थिता)॥

——दौलतरामगौडः।

मृ० स्तो० ४

# अथ मृत्युञ्जयस्तोत्रम्

श्रीनन्दिकेश्वर उवाच ॥ कैलासस्योत्तरे शृङ्गे शुद्ध-
स्फटिकसन्निभे। तमोगुणविहीने तु जरामृत्युविवर्जिते॥ १॥
सर्वार्थसम्पदाधारे सर्वज्ञानकृतालये। कृताञ्जलिपुटो
ब्रह्मा ध्यानासीनं सदा शिवम् ॥ २ ॥ पप्रच्छ प्रणतो
भूत्वा जानुभ्यामवनिं गतः। सर्वार्थसम्पदाधारो ब्रह्मा-
लोकपितामहः ॥ ३ ॥ ब्रह्मोवाच ॥ केनोपायेन देवेश
चिरायुर्लोमशोऽभवत् । तन्मे ब्रूहि महेशान लोकानां
हितकाम्यया ॥ ४ ॥ श्रीसदाशिव उवाच ॥ शृणु ब्रह्म-

न्प्रवक्ष्यामि चिरायुर्मुनिसत्तमः । सञ्जातः कर्मणा येन व्याधिमृत्युविवर्जितः ॥ ५ ॥ तस्मिन्नेकार्णवे घोरे सलिलौघपरिप्लुते ॥ कृतान्तभयनाशाय स्तुतो मृत्युञ्जयः शिवः ॥ ६ ॥ तस्य सङ्कीर्त्तनान्नित्यं मुनिमृत्युविवर्जितः ॥ तमेव कीर्तये ब्रह्मन् मृत्युं जेतुं न संशयः ॥७॥ श्रीलोमशउवाच ॥ ॐ देवाधिदेवदेवेश सर्वप्राणभृताम्वर । प्राणिनामपि नाथस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥ ८ ॥ देहिनां जीवभूतोऽसि जीवो जीवस्य कारणम् । जगतो रक्षकस्त्वं वै मृत्युञ्जय नमोऽस्तुते ॥ ९ ॥

मृ० स्तो० ६

हेमाद्रिशिखराकारं सुधावीचिमनोहरम् । पुण्डरीकपरं ज्योतिर्मृत्यु० ॥१०॥ ध्यानाधारं महाज्ञानं सर्वज्ञानैककारणम् । परित्रासि च लोकानां मृत्यु० ॥११॥ निहता येन कालेन सदेवासुरमानुषाः । गन्धर्वाप्सरसश्चैव सिद्धविद्याधरास्तथा ॥ १२ ॥ साध्याश्च वसवो रुद्रास्तथाश्विनिसुतावुभौ । मरुतश्च दिशा नागाः स्थावरा जङ्गमास्तथा ॥ १३ ॥ जिता सोऽपि त्वया ध्यायन्मृत्यु० ॥१४॥ ये ध्यायन्ति परां मूर्तिम्पूजयन्त्यमरादयः । न ते मृत्युवशं यान्ति मृत्यु० ॥१५॥ त्वमोङ्कारोऽसि वेदा-



मृ० स्तो० ७

नां देवानां च सदाशिवः। आधारशक्तिः शक्तीनां
मृत्यु० ॥१६॥ स्थावरे जङ्गमे वापि यावत्तिष्ठति देहगः।
जीवत्यपत्यलोकोऽयं मृत्यु० ॥ १७ ॥ सोमसूर्याग्नि-
मध्यस्थ व्योमव्यापिन्सदाशिवः। कालत्रयमहाकाल-
मृत्यु ॥१८॥ प्रबुद्धे चाप्रबुद्धे च त्वमेव सृजसे जगत्।
सृष्टिरूपेण देवेश मृत्यु० ॥ १९ ॥ व्योम्नि त्वं व्योम-
रूपोऽसि तेजः सर्वत्र तेजसि। ज्ञानिनां ज्ञानरूपोसि
मृत्यु० ॥२०॥ जगज्जीवो जगत्प्राणः स्रष्टा त्वं जगतः
प्रभुः। कारणं सर्वतीर्थानां मृत्यु० ॥२१॥ नेता त्वमि-

न्द्रियाणां च सर्वज्ञानप्रबोधकः । सांख्ययोगश्च हंसश्च मृत्यु० ॥२२॥ रूपातीतः सुरूपश्च पिण्डस्थपदमेव च । चतुर्योगकलाधार मृत्यु० ॥२३॥ रेचके वह्निरूपोऽसि सोमरूपोऽसि पूरके । कुम्भके शिवरूपोऽसि मृत्यु० ॥२४॥ त्वयङ्करोषि पापानां पुण्यानामपि वर्द्धनम् । हेतुस्त्वं श्रेयसो नित्यं मृत्यु० ॥ २५ ॥ सर्वमायाकलातीत सर्वेन्द्रिय परावर । सर्वेन्द्रियकलाधीश मृत्यु०॥२६॥ रूपं गन्धो रसः स्पर्शः शब्दः संस्कार एव च । त्वत्तः प्रकाश एतेषां मृत्यु० ॥२७॥ चतुर्विधानां सृष्टीनां हेतुस्त्वं का-

रणेश्वर। भावाभावपरिच्छिन्न मृत्यु० ॥२८॥ त्वमेको निष्कलो लोके सकले भुवनत्रये। अति सूक्ष्माति-रूपस्त्वं मृत्यु० ॥२९॥ त्वं प्रबोधस्त्वमाधारस्त्वद्बीजं भुवनत्रयम्। सत्त्वं रजस्तमस्त्वंहि मृत्यु०॥३०॥ त्वं सो-मस्त्वं दिनेशश्च त्वमात्मा प्रकृतः परः। अष्टत्रिंशत्क-लानाथ मृत्यु० ॥ ३१ ॥ सर्वेन्द्रियाणामाधारः सर्वभूत गुणाश्रयः। सर्वज्ञानमयानन्तं मृत्यु० ॥३२॥ त्वमात्मा सर्वभूतानां गुणानां त्वमधीश्वरः। सर्वानन्दमयाधार मृत्यु० ॥ ३३ ॥ त्वं यज्ञः सर्वयज्ञानां त्वं बुद्धिर्बोध-

लक्षणम् । शब्दब्रह्मत्वमोङ्कार मृत्यु० ॥३४॥ श्रीसदा



शिव उवाच ॥ एवं सङ्कीर्त्तयेद्यस्तु शुचिस्तद्गतमान-
सः । भक्त्या शृणोति यो ब्रह्मन्न स मृत्युवशी भवेत्
॥३५॥ न च मृत्युभयं तस्य प्राप्तकालं च लङ्घयेत् ।
अपमृत्युभयं तस्य प्रणश्यति न संशयः ॥३६॥ व्या-
धयो नोपपद्यन्ते नोपसर्गभयं भवेत् । प्रत्यासन्नतरे काले
शतैकावर्तने कृते ॥ ३७ ॥ मृत्युर्न जायते तस्य रोगा-
न्मुञ्चति निश्चितम् । पञ्चम्यां वा दशम्यां वा पौर्ण-
मास्यामथापि वा ॥ ३८ ॥ शतमावर्तयेद्यस्तु शतवर्षं

स जीवति। तेजस्वी बलसम्पन्नो लभते श्रियमुत्तमाम् ॥ ३९ ॥ त्रिविधं नाशयेत्पापं मनोवाक्कायसम्भवम्। अभिचाराणि कर्माणि कर्माण्याथर्वणानि च। क्षीयन्ते नात्र सन्देहो दुःस्वप्नञ्च विनश्यति ॥४०॥ इदं रहस्यं परमं देवदेवस्य शूलिनः। दुस्वप्ननाशनं पुण्यं सर्व-विघ्नविनाशनम् ॥ ४१ ॥

इति श्रीशिवब्रह्मसम्वादे श्रीमृत्युञ्जयस्तोत्रं सम्पूर्णम्।



ॐ नमो भगवते मृत्युञ्जयाय। ततो विष्ण्वर्पि-तमना मार्कण्डेयो महामतिः। तुष्टाव प्रणतो भूत्वा

देवदेवं जनार्दनम् ॥ १ ॥ विष्णुनैवोपदिष्टं तु स्तोत्रं कर्णौ महामनाः । सम्भावितेन मनसा तेन तुष्टाव माधवम् ॥ २ ॥ ॐ नमो भगवते वासुदेवाय ॥ नारायणं सहस्राक्षं पद्मनाभं पुरातनम् । प्रणतोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति ॥ ३ ॥ गोविन्दं पुण्डरीकाक्ष-मनन्तमजमव्ययम् ॥ केशवं च प्रणतोऽस्मि किं मे मृत्युः करिष्यति ॥ ४ ॥ वाराहं वामनं विष्णुं नारसिंह जनार्दनम् । माधवं च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति ॥५॥ पुरुषं पुष्करं पुण्यं क्षेमबीजं जगत्पतिम् ।



मृ० स्तो० १३

लोकनाथं प्रणतोऽस्मि किं मे मृत्युः करिष्यति ॥६॥ भूतात्मानं महात्मानं जगद्योनिमयोनिजम् । विश्वरूपं प्रणतोऽस्मि किं मे मृत्युः करिष्यति ॥७॥ सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् । महायोगं प्रणतोऽस्मि किं मे मृत्युः करिष्यति ॥ ८ ॥ इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः ॥ अपयातस्ततो मृत्युर्विष्णुदूतैश्च पीडितः ॥९॥ इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता । प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम् ॥१०॥ मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥११॥

य इदं पठते भक्त्या त्रिकालं नियतः शुचिः । नाकाले तस्य मृत्युः स्यान्नस्याच्युतचेतसः ॥१२॥ हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमादिदेवम् । सञ्चिन्त्य सूर्यादपि रोचमानं मृत्युं स रोगी जितवाँस्तदैव ॥१३॥

इति श्रीनृसिंहपुराणे मार्कण्डेयकृतं मृत्युञ्जयस्तोत्रं समाप्तम् ।



मुद्रक—शिवशंकर प्रेस, बुलानाला, वाराणसी ।



मृ० स्तो० १५

